## २७

वैशम्पायन उवाच ।
ते समासाद्य तु गङ्गां तु शिवां पुण्यजलोचितां
ह्रदिनीं च प्रसन्नां च महारूपां महाबलाम्१
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च २
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ।
उदकं चक्रिरे सर्वा रुदत्यो भृशदुःखिताः ३
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः ।
उदके क्रियमाणे तु वीराणां वीरपत्निभिः ४
सूपतीर्थाऽभवद्गङ्गा भूयो विप्रससार च ।
तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ॥ ५
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत ।
ततः कुन्ती महाराज सहसा शोककर्शिता
रुदती मन्दया वाचा पुत्रान्वचनमब्रवीत् ।
यः स वीरो महेष्वासो रथयूथपयूथपः॥७
अर्जुनेन जितः संख्ये वीरलक्षणलक्षितः ।
यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ८
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ।
प्रत्ययुध्यत वः सर्वान्पुरा यः सपदानुगान् ९
दुर्योधनबलं सर्वं यः प्रकर्षन् व्यरोचत ।
यस्य नास्ति समो वीर्ये पृथिव्यामपि पार्थिवः
योऽवृणीत यशः शूरः प्राणैरपि सदा भुवि ।
कर्णस्य सत्यसन्धस्य संग्रामेष्वपलायिनः ११
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ।
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत
कुण्डली कवची शूरो दिवाकरसमप्रभः ।
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम्
कर्णमेवानुशोचन्तो भूयः क्लान्ततराऽभवन् ।
ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः १४
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ।
यः शरोर्मिर्ध्वजावर्तो महाभुजमहाग्रहः १५
तलशब्दानुनदितो महारथमहाह्रदः ।
यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् १६
कथं पुत्रो भवत्याः स देवगर्भः पुराऽभवत् ।
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् १७
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ।
यस्य बाहुबलं नित्यं धार्तराष्ट्रैरुपासितम् १८
उपासितं यथाऽस्माभिर्बलं गाण्डीवधन्वनः ।
भूमिपानां च सर्वेषां बलं बलवतां वरः १९
नान्यं कुन्तीसुतात्कर्णादगृह्णाद्रथिनां रथी ।
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः २०
असूत त भवत्यग्रे कथमद्भुतविक्रमम् ।
अहो भवत्या मन्त्रस्य गूहनेन वयं हताः २१
निधनेन हि कर्णस्य पीडितास्तु सबान्धवाः
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ॥ २२
पञ्चालानां विनाशेन कुरूणां पतनेन च ।
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् २३
कर्णमेवानुशोचामि दह्याम्यग्नाविवाहितः ।
नेह स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितम्
न चेदं वैशसं घोरं कौरवान्तकरं भवेत् ।
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः २५
व्यरुदच्छनैक राजंश्चकारास्योदकं प्रभुः ।
ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि ।
तत आनाययामास कर्णस्य सपरिच्छदाः ॥
स्त्रियः कुरुपतिर्धीमान् भ्रातुः प्रेम्णा युधिष्ठिरः
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम्२८
चकार विधिवद्धीमान्धर्मराजो युधिष्ठिरः ।
पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति
इत्युक्त्वा स तु गङ्गाया उत्तताराकुलेन्द्रियः ।
भ्रातृभिः सहितः सर्वैर्गङ्गातीरमुपेयिवान् ३०

इति श्रीमहाभारते स्त्रीपर्वणि श्राद्धपर्वणि कर्णगूढजत्वकथने सप्तविंशोऽध्यायः ॥ २७ ॥



## ॥ स्त्रीपर्व समाप्तम् ॥

२७

ते समासाद्येति ॥ १ ॥ वेष्टनानि उष्णीषकटिबन्धनादीनि ॥२॥ सूपतीर्था शोभनजलावतरणमार्गा ॥५॥ भवन् अभवन् अडभाव आर्षः ॥ १४ ॥ नेह स्मेति। कर्णे भ्रातृत्वेन ज्ञाते सति तदनुसारिणामस्माकमपि दुर्लभं नाभविष्यन्नापि कौरवाणां क्षयोऽभविष्यदित्यर्थः ॥ २४॥

इति श्रीमहाभारते स्त्रीपर्वणि नैलकण्ठीये भारतभावदीपे सप्तविंशोऽध्यायः ॥ २७ ॥

अस्यानन्तरं शान्तिपर्व भविष्यति।

तस्यायमाद्यः श्लोकः—

वैशम्पायन उवाच—

कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १

## ॥ इति श्रीमहाभारते *स्त्रीपर्व समाप्तम् ॥



* यद्यप्यादिपर्वणि पर्वसंग्रहकथनावसरे-सप्तविंशति-रध्यायाः पर्वण्यस्मिन्प्रकीर्तिताः। श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता' इत्युक्तम्। अस्मिंस्त्रीपर्वणि तु अध्यायाः सप्तविंशतिसंख्याका एव, तथापि श्लोकसंख्या तु ८२५ वर्तते, इयं श्लोकवृद्धिः मध्ये मध्ये प्रक्षिप्तश्लोकैः संजाता वेदितव्येति शम्।

इति श्रीकिञ्जवडेकरकुलकमलदिवाकरसोमयाजिदत्तात्रेयदीक्षिततनुज-पण्डितरामचंद्र-शास्त्रिकृतौ महाभारतलघुटिप्पण्यां स्त्रीपर्व समाप्तम्। भारती जयतु। शके १८५३।

